## ॥ अथ सम्पादकोक्तिः ॥

अथ यद्यपि प्रथमकाण्डानन्तरं क्रमप्राप्त द्वितीयकाण्डसम्पादन मेव युक्तम्, परं द्वितीयकाण्डभाष्यस्य सङ्गृहीतादर्शपुस्तकेभ्योऽपर मेक मपि विशुद्ध पुस्तकं सङ्ग्रहणीयं तच्च कालसापेक्ष मिति धिया क्रम मुल्लङ्घ्यापस्य तृतीयकाण्डस्य सम्पादने प्रवृत्तोऽभव मितीद मेवैवंविधक्रम-व्यत्यासस्य निदानम् ।

तस्यैतत्तृतीयकाण्डस्य पाठान्तरादिसम्पादनाय सङ्गृहीताना मादर्श-पुस्तकाना मेव नामधेयानि कल्पितानि—

क = १६४-पत्रात्मकम्, १६०२-संवल्लिखितम्, पूर्सम् ।
ख = ४८-पत्रात्मकम्, १६०५ (?)-संवल्लिखितम्, पूर्सम् ।
ग = डा०-वेबर-सम्पादितम्, ख्रि०-१८४९-बर्लिन्मुद्रितम्, पूर्सम् ।
घ = अजमेर-वैदिकयन्त्रालये १९५९-संवन्मुद्रितम्, पूर्सम् ।
ङ = १८५-पत्रात्मकम्, १६९१-संवल्लिखितम्, पूर्सम् ।
च = ३२-पत्रात्मकम्, १८२९-ख्रि०-लिखितम्, पूर्सम् ।
छ = डा०-वेबरेणाप्तुस्ताक्षराणि विचित्य समाहृत ग-मुद्रितम् ।
ज = श्रीरामपुरकालेजीयं ख्रि०-१८१८-लिखितम्, पूर्सम् ।

एष्वष्टस्वादर्शपुस्तकेष्वाद्या चतुर्ष्कं मूलस्यापरं तु चतुर्ष्कं भाष्यस्य । तत्र ग-घयोरैक्य मुपलभ्यते, समुपलभ्यते च ख-च-जाना मेकादर्शवीजत्वम्, तत्रापि जस्य परित्याज्यतैव सम्मता ।

अस्मिन् काण्डेऽग्निष्टोमसंस्थस्य सोमयागस्य ग्रावाणिर्म्माणादि-सोमाभिषवान्तानि कर्म्माणि विहितानि । तत्र दीक्षणीया, प्रायणीया, आतिथ्या, उपसद्, अग्निप्रणयनीया, आग्नीषोमीया, सुत्या चेति प्रधानाङ्ग-कर्म्माणि ; तेष्वेव यजुर्विस्तरादीनि विनाप्याग्निष्टोमस्याध्वर्य्वा-न्तानि प्रत्यङ्गकर्म्माणि समाश्रितानीति विवेक ।

एकाहाहीनसत्रेतित्रैविध्य मापन्नानां सर्वेषा मेव सोमयागाना प्रकृतिभूतस्याग्निष्टोमस्याध्वरस्यादिभूताङ्गप्रत्यङ्गकर्मणां ग्रावाणिर्म्माणादीना मिह विधान माख्यात मितीदं काण्ड [illegible] मित्याख्यायते । "अध्वर मिति

यज्ञनाम, ध्वरतिर्हिंसाकर्म्मा, तत्प्रतिषेधः"—इत्याह हि यास्कः ( निरु० १ ३. ३ )। यद्यप्यत्रैव काण्डे पशुसञ्ज्ञपनं विहितम्, तथाप्यस्याध्वरत्वं न विहन्यते, अग्नीषोमीयपशुसञ्ज्ञपनस्याम्नायविहितत्वेन हिंसात्वाभावात्। तथाह्युक्तं भगवता यास्केन— "आम्नायवचनादहिंसा प्रतीयेत"—इति (निरु० १ ५. २)। एवमेव सिद्धान्तितं मीमांसादर्शनेऽपि महामुनि-जैमिन्यादिभिः। तदेव "दृष्टवदानुश्रविकः, स ह्यविशुद्धि"—इति (सा० त० कौ० २ का०) सांख्याचार्यसिद्धान्तो अश्वमध्यस्थमसीद्योदवत् किं न विक्लिन्न इति सुधीभिर्विभाव्य मेव।

इह काण्डे यावन्त्याख्यानानि श्रुतानि, तेषु "सौपर्णीकाद्रव" नाम (११८, ३६२ पृ०) प्रधानं मन्यतेऽस्माभिः। वस्तुतस्त्वेतदाख्यानं स्वाच्छत-यथाम्नानाच्च पूर्वतनम्, कथ मन्यथा ह्युपपद्येताऽत्र ब्राह्मणे तद्व्याख्यानम्। एतस्याख्यानस्याधियज्ञव्याख्यानतोऽधिदैवत (वैज्ञानिकं) व्याख्यानं सुत्क, एतरम्, शेषं तु तद् गुरूपदेशादिभिः।

एतदेवाख्यानं रामायण–महाभारत–भागवताग्निपुराणादिषु बहुधा प्रपञ्चितं मतिपक्षविलक्ष। तत्तत्स्थिद सुपाख्यानं किञ्चिदुपदेशप्रदानाय, वक्तव्यविषयस्य नीरसत्वपरिहाराय च कविकल्पनाप्रसूतं सर्वं मन्तत मेव। तदिदमस्य यज्ञीयव्याख्यानतोऽपि सम्प्रतीयते, तथाच "वागेव सुपर्णी, इयं कद्रू"—इत्यादिकं (३६१ पृ०) मदृश्यम्। तैत्तिरीयकेऽप्येवमेव—"इयं कद्रू, असौ सुपर्णी, छन्दांसि सौपर्णेयाः"—इति (सं० ६. १ ६. २)। अतएवोक्तमग्निपुराणेऽपि—"गायत्र्यादीनि छन्दांसि सौपर्णेयानि पक्षिणः"—इति। वैदिकाख्यायिकाना मेषैव गतिः प्रायः सर्वत्रोप-लभ्यते। उक्तं चैतन्मीमांसादर्शनेऽतिस्पष्टम्—"असद् वृत्तान्तान्वाख्या-नम्"—इत्यादि (जै० सू० १ २ १० शा० भा०)। एवञ्चैतन्मूलक-महाकाव्येतिहासपुराणग्रन्थाना मपि सर्वेषा मेवमेव गतिः सर्वैः धीमुषी-मद्भिः लोकार्थैव्यञ्च किमु वक्तव्य मस्तीति शम्॥

काशीकोठा-नाम राजन्वती। } श्रीसत्यव्रतशर्म्मा।
सं १९६१। ई० १९०५। } (व्यावसथ, सामश्रमी, आचार्य्यस्य)

# ॥ अथमूलशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | प्र० ब्रा० क० | पृष्ठे |
|---|---|---|---|
| सुव्वं ... | सुव्वँ ... | १. २. १४. | ... १५ |
| पुष्पम्निति ... | पुष्पम्निुति .. | १. २. २०. | ... १७ |
| पुष्पम्निति ... | पुष्पम्निुति ... | १. २. २०. | ... १७ |
| घेन्वे ... ... | घेन्वै ... | १. २. २१. | ... १७ |
| मुत्तरं ... ... | मुन्तरं ... | १. ५. ११. | ... ६० |
| मित्येसुतो ... | मित्येसुतो ... | १. ५. ३१. | ... ६४ |
| युद्धाचंयमो ... | यद्धाचंयमो ... | १. ५. ३८. | ... ६६ |
| कुतपश्चालना ... | कुतपश्चालना ... | २. २. १५. | ... १०५ |
| तद्रिरण्यानां ... | तद्रिरण्यानां ... | २. ३. १. | ... ११८ |
| वेदाग्रा ... | वेदाग्रा ... | २. ३. ४. | ... ११८ |
| व्युष्यसुदिति- ... | व्युष्यसुदिति- | २. ४. २ | .. १२८ |
| ब्रौर्य्यं ... ... | ब्रौर्य्यं ... | १. ६. ७. | ... १९९ |
| सुभूता ... | सुम्भूता ... | २. ६ ८. | ... १९९ |
| ब्रह्मर्ष्वं ... | ब्रह्मर्ष्वं ... | २. ६ ११. | .. १९७ |
| यक्षुन्दोभ्य* ... | यक्षुन्दोभ्य ... | ३. २. ८. | ... २१० |
| वे ... ... | वै ... ... | ३. ४. ८. | ... २४३ |
| ज्यागाना मौषधि* | ज्यागानामौषधि | ३ ४ १३ | ... २४४ |
| निरुवोमनु ... | निरुवोदनु ... | ३ ४. २०. | ... २४९ |
| ह्यापि ... | ह्यापिं ... | ३ ५. ११. | ... २५८ |

* इत्येव पाठो न च दुष्टश्चे ।

| अशुद्धम् | शुद्धम् | प्र० ब्रा० क० | पृष्ठे |
| --- | --- | --- | --- |
| दुरीहसौ ... | दुरीयसौ .. | ४. १. ११ ... | २७३ |
| मेतुद्विभ्यो . | मेतुद्विभ्यो ... | ४. १. १२. ... | २७९ |
| हैवास्या .. | हैवास्य .. | ४ २. १५. ... | २९८ |
| प्रूवेद्य .. .. | प्रुवेद्य . | ५ ४. १६. .. | ३४४ |
| युद्दै ... ... | युद्दे | ५. २. १. ... | ३०६ |
| मुष्ये- ... .. | मुष्ये- ... | ४ ५ १४. ... | ४११ |
| मुग्मानुब्नुता ... | मुग्धानुब्नुता ... | ५. ४. २२. ... | ४१२ |
| यूप प्रकलु .. | यूपप्रकलु .. | ५. ४. ३०. ... | ४१५ |
| एत ... ... | एतं ... | ५. ५. २ ... | ४३२ |
| ॥ ११ ॥ ... | ॥ १२ ॥ ... | ६. २ १२. ... | ४५४ |
| ऽर्विनु ... ... | ऽर्चिर्नु ... | ६. ३. १२. ... | ४६६ |
| ऽर्विनु ... ... | ऽर्चिर्नु ... | ६ ३ १२ ... | ४६६ |
| रेतुन्स्लोकान् ... | रेतान्स्लोकान् | ६. ३. २२. ... | ४६८ |
| सुन्दधत्ते ... | सुन्दधते ... | ६. ३. ३०. ... | ४७० |
| भूतोनर्थ्युः ... | भूतोऽनर्थ्यो ... | ६. ४. १५. ... | ४८४ |
| मसुरित्यु ... | मसमुरित्यु ... | ७ ४. ३१. ... | ५५१ |

स्यादेव मन्थोऽन्योऽपि चाशुद्धपाठः शोधकदृष्ट्यादिदोषतः ।

---

# शतपथब्राह्मण-तृतीयकाण्डस्य

# सूचीपत्राणि ।

॥ अथ प्रपाठकसूची ॥



॥ अथाध्यायसूची ॥

## ॥ अथ ब्राह्मणसूची ॥

---

## ॥ अथ कण्डिकासूची ॥

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|

---

## ॥ अथ विषयसूची ॥

### ( १प्र० १ब्रा० )

अथ शालानिर्म्माणाय देवयजनपरिग्रहविधि । तत्र देवयजनप्रदेशे प्रथमं प्राचीनवंशशालानिर्म्माणम्*, ततः उदीचीनवंशशालानिर्म्माणञ्च । ततस्तत्र दीक्षितस्य शयने नियमविशेष, सर्वतः परिश्रयणञ्च । तत्राग्नि- वर्जिकाणां शूद्रादीनामभिप्राप्तिनिषेध, दीक्षितस्य सर्वैर्वाग्व्यवहारनिषेध, दीक्षितस्य शालाप्रवेशश्चेति ।

### ( १प्र० २ब्रा० )

अथ दीक्षाविधि । तत्र प्रथमं दीक्षाकालनिरूपणम् । ततः क्षौरार्थं परिश्रयणम्, तस्मात् नखनिकृन्तनम्, केशश्मश्रुवपनम्, स्नानम्, वासःपरिधानम्, पुनः शालाप्रवेशश्चेति ।

---

* [illegible]

( १प्र० ३ब्रा० )

अथ दीक्षाङ्गभूताया आग्नावैष्णवेष्टेः प्रयोगविधिः । तत्र प्रथमं मय प्रयायनम् । ततः समृद्धिफलकामस्य आदित्यचरुविधानम्, आदित्यपरि- चायकमन्त्रोदाहरणम्, तस्य व्याख्यानञ्च । तस्या मिष्टौ सामिधेनीमाञ्च दशसे प्राप्ते तत्सप्तदशत्वविधिः, तस्या पत्नीसंयाजान्तत्वविधानपूर्वकं शमिञ्च यजुर्निषेधश्चेति ।

अथ दीक्षितस्य अभ्यङ्गविधिः । चक्षुषोरञ्जनप्रकारादिकम्, दर्भैः पावनम्, प्रकृतौ वाग्यादीनां मविचलादिवर्णनम्, अङ्गुलीना न्यञ्चकरणम्, मुष्टीकरणम् वाग्यमनञ्च । ततस्तस्य दीक्षाकुट्यर्थं शालाप्रवेशः, तत्र तत्पचरप्रकारोपदेशः, ततस्तस्य गर्भ इति व्यपदेशश्चेति* ।

( १प्र० ४ब्रा० )

अथ दीक्षाहुतिविधिः । दीक्षाहोमस्यास्य औद्ग्रभणनामकरणम् । तद्धोमीयस्य प्रथमस्य मन्त्रस्य व्याख्यानम्, द्वितीयस्य तात्पर्यव्याख्यानम्, तृतीयस्य कल्पत्वविधानम्, चतुर्थस्य च व्याख्यानम्, पञ्चमस्य छन्दोद्वारा प्रशंसनञ्च । तत एकाहुतिपक्षोपन्यासः । ततः पूर्णाहुतिविधानम्, अक्षर- सङ्ख्याद्वारा मन्त्रप्रशंसनञ्चेति ।

( १प्र० ५ब्रा० )

अथ कृष्णाजिनदीक्षाविधिः । तत्र कृष्णाजिनदर्शनास्तरणम्, एक कृष्णाजिनपक्षप्रशंसनम्, कृष्णाजिनदीक्षार्थं मुपवेशनप्रकारः, तन्मन्त्र व्याख्यानम्, उदकग्रब्दार्थनिर्णयश्च । ततः कृष्णाजिनारोहणम्, कृष्णाजिन प्रशंसनम्, तत्पश्चाद्भागे एव प्रथमोपवेशनविधानश्चेति ।

---

* मानुषस्यैवपरित्यागेन दीक्षाप्रकारेण देवदेहोत्पन्नत्वात्मना दीक्षितो गर्भः भा ।

अथ मेखलादीक्षाविधि । तदुपादानद्रव्यकथनम्, तस्या मुञ्जमिश्रितत्वाख्यानम्, केशवेणीवन्निर्माणम्, प्रसव्यविलेन मातृदेवत्यत्वम्, अप्रसव्यविलेन पितृदेवत्यत्वम्, तद्बन्धनमन्त्रस्य विधिव्याख्याने च ।

अथ वाससाच्छादनविधि । तादृशसंस्कृतस्य दीक्षितस्य विष्णुतुल्यत्वाख्यानञ्चेति ।

अथ वस्त्रान्ते कृष्णविषाणाबन्धनविधि । तत्र प्रथमं कृष्णविषाणोत्पत्त्याख्यायिका, प्रसङ्गात् गर्भवर्णनम्, वागवर्णनञ्च । तद्बन्धने ऊर्द्ध्वमुखत्वविधानम्, बन्धनप्रकारोपदेशः, तन्मन्त्रस्य विधिव्याख्याने च । तेनैव कृष्णविषाणेन कण्डूयनविधानम्, अन्येन कण्डूयननिषेधश्चेति ।

अथ दण्डदीक्षाविधि । तत्र दण्डकाष्ठनिरूपणम्, दण्डप्रमाणम्, दण्डोच्छ्रयणम्, तस्य दर्भे मावनश्चेति ।

अथ मुष्टीकरणवाग्यमनविधि । उत्सृष्टवचस पुनर्वाग्व्यवहारे प्रायश्चित्तम्, वाग्यमनस्य प्रयोजनाभ्याख्यानञ्चेति ।

अथाध्वर्युकर्तृकदीक्षितावेदनविधि । तथावेदनवाक्यगतस्य ब्राह्मणपदस्य प्रयोजनवर्णनञ्चेति ॥

---

( ९प्र० १ब्रा० )

अथ वाग्विसर्जनकालविधानम् । तत्रादौ वाग्यमनविधानार्थाख्यायिका । वाग्विमोककालविषये पक्षान्तरोपन्यास, तन्मन्त्रविषये च पक्षान्तरोपन्यास, वाग्विमोकस्याग्न्यभिमुखकर्तव्यत्वम्, तन्मन्त्रपदव्याख्यानम्, प्रसङ्गतो वनस्पतेर्यज्ञार्हत्वोपपादनञ्चेति ।

अथ व्रतश्रपणविधानम् । तत्राग्निहोत्रस्य पुरस्तात्ताभिधानेन प्रशंसनम्, दीक्षितस्याग्न्यभितुल्यत्वाख्यानम्, शरीरस्थाना वागादीना मध्यमादिदेवरूपत्वकथनञ्च । प्रथमव्रतविषयकपक्षद्वयोपन्यास देवमानुषकालयोर्विभागश्चेति ।

अथ यजमानकर्तृक मुदकस्पर्शनम्, नाभ्युपस्पर्शनञ्च। दीक्षितस्य मूत्रोत्सर्गे विशेषोपदेश, तत्र मन्त्र, तद्व्याख्यानम्, गृहीतलोष्टस्य पुन प्रक्षेपे मन्त्रादिविधानञ्चेति।

अथ दीक्षितस्य,—स्वापकाले अयये परिदानविधि, स्वापानन्तर प्रबोधे पुनर्निद्राया अप्राप्तौ मन्त्रजपविधि, अव्रतस्य क्रोधादेस्त्यागविधि, तत्प्रायश्चित्तमन्त्रविधिश्च। तस्यैव यज्ञार्थमवादिधनलाभे वाच्यमन्त्रस्य विधानम्, अस्तमयोदयकालयो प्रतिदिवस मध्वर्युकर्तृक दीक्षितस्य सम्प्रेषणम्, दीक्षितस्यानियमितसञ्चारस्वापनिषेध, प्रसङ्गाद् दीक्षितशब्दनिर्वचनञ्चेति।

( १प्र॰ २ब्रा॰ )

अथ प्रायणीयेष्टिविधानम्। तदाख्यायिका। तत्र पथ्यास्वस्ति-देवताकस्य, प्रथमयागस्य द्वितीयस्याग्नेयस्य, तृतीयस्य सौम्यस्य, चतुर्थस्य सावित्रस्य, पञ्चमस्यान्तिमस्यादितिदेवताकस्य च क्रमेण विधानम्। तत्पञ्च-सङ्ख्याप्रशसा, ऋतुपरिज्ञानहेतुत्वेन पुन पञ्चसङ्ख्याप्रशसा, दिङ्मोहनिवृत्ति-हेतुत्वेनापि पञ्चसङ्ख्याप्रशसा च। तत्र प्रथमदेवतया उदीच्या दिश प्रज्ञानोपपादनम्, द्वितीयदेवतया प्राच्या दिश प्रज्ञानोपपादनम्, तृतीय-देवतया दक्षिणाया दिश प्रज्ञानोपपादनम्, चतुर्थदेवतया प्रतीच्या दिश प्रज्ञानोपपादनम्, पञ्चमदेवतयोर्ध्वाया दिश प्रज्ञानोपपादनञ्चेति।

अथातिथ्याया इष्टे सोमाध्वरशिरोरूपत्वेन वर्णनम्, प्रायणीयो-दयनीययोस्तु बाहुद्वयरूपत्वेनेति।

अथ प्रायणीयेष्टे शय्यन्तत्वम्, न तु पत्नीसयाजान्तत्व मिति निरूपणञ्चेति।

( १प्र॰ ३ब्रा॰ )

अथ सोमक्रयविधानार्थाख्यायिका। तत्र सोमक्रयप्राक्कालिक-होमस्य विधानम्, तन्मन्त्रविधि, तद्व्याख्यानञ्च। ततो हिरण्यस्यापोद्धार-

विधानम्, तत्प्रशंसनम्, तथा अपोद्धारमन्त्रविधिव्याख्याने च। अथान्वारम्भविधानम्। ततः सोमक्रयण्यवस्थापनम्, तस्या अभिमन्त्रणम्, तदभिमन्त्रणवाक्यानां तात्पर्यव्याख्यानम्, ततस्तस्या एवोदकग्राहणविधानञ्चेति।

( २प्र० ४अ० )

अथ सोमक्रयण्या अनुनिष्क्रमणविधिः। तत्र प्रथमं तन्मन्त्रः, तद्व्याख्यानं च। ततो होमाय हिरण्यनिधानप्रशंसा, आज्यप्रशंसा च। ततः समन्त्रकहोमविधानम्, तन्मन्त्रव्याख्यानञ्च। ततः सोमक्रयण्याः पादस्य परिलेखनविधिः, तन्मन्त्रश्च। ततस्तत्सप्तमपदपांसोः स्थाल्यां समन्त्रकं स्थापनम्, यजमानाय तत्प्रदानम्, तस्य स्थालीस्थपदपांसोः यजमानकर्तृकं समन्त्रकं ग्रहणम्, अध्वर्योश्च समन्त्रक मात्मोपस्पर्शनम्, ततः पत्न्यै तत्प्रदानम्, नेष्टृकर्तृकञ्च तत्र मन्त्रवाचनम्, तथा सोमक्रयणीप्रदर्शनञ्चेति।

अथ सोमक्रयण्यास्त्रिविधस्वरूपाभिधानम्, तत्र मुख्यानुकल्पभेदोपदेशः, श्वेताद्याः सोमक्रयणीत्वनिषेधश्च। ततः अङ्गविकृत्यादिदोषदुष्टायाः सोमक्रयण्या गोर्वर्जनीयत्वविधानम्, तस्या वागात्मकत्वनिर्णयश्चेति।

( २प्र० ५अ० )

अथाध्वर्यौ पात्रे तत्पदपांसुप्रक्षेपविधिः, ततो हस्तप्रक्षालनविधानञ्च। अध्वर्यौ स्वाङ्गुल्यां हिरण्यबन्धनविधिः, सोमोपनहनाय वस्त्रविधानम्, उष्णीषवस्त्रविकल्पविधानञ्च। अध्वर्युयजमानयोरन्यतरस्य सोमोपनहनादानकर्तव्यताख्यानम्। प्राचीनवंशस्य पुरोदेशे उपरवप्रदेशेऽनुपादेयाग्रस्थापनयनम्, निहितोदकुम्भस्य समीपे सोमविक्रयिणः स्थाननिर्देशश्च। ततः क्रयदेशं समागच्छत्सु ऋत्विग्यजमानेषु अध्वर्योर्यजमानवाचनम्, सोमं प्राप्य प्राङ्मुखोपवेशनम्, ततः सोमाभिमर्शनम्, सोमविचिन्वनञ्च। आस्तृते वाससि सोमोन्मानम्, तन्मन्त्रस्य विधानम्, तस्य च मन्त्रस्य

देवताद्वारा छन्दोद्वारा च प्रशंसनञ्च। सोमोन्मानप्रकारप्रदर्शनम्, मान गतदशसङ्ख्याप्रशंसनम्, सोमाय प्रसारितस्य वस्त्रस्य पर्यन्तप्रदेशानेकच सङ्ख्योष्णीषेण ग्रन्थिकरणम्, तद्ग्रन्थिमध्ये समन्त्रक सुषिरकरणञ्चेति।

( ३प्र० ६ब्रा० )

अथ सोमक्रयविधि तत्पणनव्यवहार। तत्र प्रथम गो कलया सोमक्रयप्रस्ताव अत्रैव गोमहत्त्वकथनाय प्रासङ्गिक दशविधगोवीर्य कथनञ्च। ततो गो अर्धेन तत्क्रयप्रस्ताव, ततो गोपदा क्रयप्रस्ताव, ततो गोऽर्द्धेन क्रयप्रस्ताव, ततो गवा क्रयप्रस्ताव पञ्चम, तत्रैव गोस्तव प्रश्नञ्च। पणनपूर्वकक्रयस्य प्रशंसा। तत एकहायन्या सोमक्रयण्या सह देयषु हिरण्यादिषु दशसङ्ख्येषु मध्ये हिरण्ये दीयमाने यजमानपाठ्य मन्त्रादिविधि, ततोऽजादिषु च तथैव।

अथ सामस्य ग्रहणम्, स्थापनम्, अनुदेशनम्, आच्छादनञ्च। अत्रैव धिष्ण्यानां वर्णनम्। ततोऽध्वर्योर्यजमानवाचनम्। अथ सोम मादायोत्था-नम्, शिरसि धृत्वा शकटसमीपे गमनादिकञ्चेति॥

---

( ३प्र० ४ब्रा० )

शकटमध्ये सोमस्थापनाय समन्त्रक कृष्णाजिनास्तरणम्, न स्पृष्ट्वा अपरमन्त्रवाचनम्, तस्य व्याख्यानञ्च। तत शकटेन सह सामस्य वाससा बन्धनम्, तत्र मन्त्रविधानम्, तद्व्याख्यानञ्च।

यदि दीक्षाया द्वे कृष्णाजिने स्वीकृत स्याताम्, तयोरेकस्य तत्र अजरूपत्व व्यवहारविधानम्, यद्येकम् तत्कृष्णाजिनग्रीवाग्र मेवावरुत्य अजविधि। तत्र मन्त्रतत्प्रशंसा च। चिबुकप्रमाणोद्धतफलकयोरन्तरेण सुब्रह्मण्यकर्तृक मन्द्रद्वयप्रेरणम्, सुब्रह्मण्यस्य रथाधस्थितिविधानम्,

पलाशशाखया तत्प्राशनविधिश्च । तयोरनडुहो पर्जन्यवर्णतायाः प्राशस्त्याभिधानम्, तत्र समन्त्रकं तयोः शकटे योजनम्, तन्मन्त्रव्याख्यानञ्च । तत्र शकटस्य पश्चात्पश्चाद् गमनादिकम्, तत्तन्मन्त्रविधिव्याख्याने च । तत्र सुब्रह्मण्याह्वानम्, तदाह्वाननिगदव्याख्यानञ्च ।

अथ प्रतिप्रस्थाता अग्नीषोमीयं पशुमादाय, प्राग्वंशाद्धविर्धानं गच्छन् सोमस्याभिमुखं स्थापयेदिति विधिः, तस्य च पश्वोर्देव्यादिप्रशंसनम्, तत्र स्थापने मन्त्रविधानञ्च ।

अथाध्वर्योस्तच्छकटोपलम्भनविधिः, तन्मन्त्रव्याख्यानम्, तद्व्याख्यानञ्च । ततोऽध्वर्य्वादीनां चतुर्णां ऋत्विजां राजासन्द्यानयनम्, तदासन्द्या औदुम्बरीत्वनाभिदघ्नत्वविधानम्, मन्त्रेण तदभिमर्शनम्, मन्त्रेणैव तदुपरि कृष्णाजिनास्तरणम्, तत्र समन्त्रकं सोमासादनम्, तस्य मन्त्रपाठपूर्वकं शालाप्रवेशनम्, तत्समीपे उदपात्रस्थापनञ्चेति ।

( ३प्र० २ब्रा० )

अथातिथ्येष्टिविधिः । तत्र प्रथमं सोमस्यातिथिस्वरूपत्वाख्यानम्, ततोऽतिथिसत्कारार्थत्वख्यापनञ्च । ततो हविरासादनम्, तत्रावपनादिकम्, नवकपालपुरोडाशः, कार्ष्मर्यमयाः परिधयः, आश्ववालः प्रस्तरः, ऐक्ष्व्यौ विधृती चेति विधानानि ।

अथाग्निमन्थनविधिः । तत्राग्निमन्थनप्रकारनिरूपणम्, दर्भतरुणकयोर्विधानम्, अधरारणिकथनम्, अरण्योराज्यविलापन्योश्चोर्वश्याद्यात्मकतया प्रशंसनञ्च । ततो मन्थविधिः, अनुप्रहरणविधिः, अनुप्रहृतेऽग्नौ होमविधिश्च । अस्या इष्टेरिडान्तत्वविधानम्, अत्रानुयाजनिषेधश्चेति ।

( ३प्र० ३ब्रा० )

अथ तानूनप्त्रविधिः । तत्राख्यायिका, तत्र मन्त्रमानप्रदर्शनादिकञ्च । तानूनप्त्रार्थाज्यग्रहणादिविधानम्, तानूनप्त्रं माज्यं सर्वं स्पष्टमपि तत्

यजमानायैव दातव्य मिति निर्णय, यजमानेन क्रियमाणस्य सामोपायस्य देवै ह्रुतं सामैव मूल मित्याख्यानञ्चेति ।

( ३प्र० ४ब्रा० )

अथावान्तरदीक्षाख्यप्रायश्चित्तविशेषविधि । तत्र प्रथम माख्यायिकया तस्यावतारणम्, ततोऽवान्तरदीक्षाकल्पनप्रकार, ततत्द्विधानम् । तच समिदाधानम्, तत्र चाख्यानम्, समिदभ्याधानम्, इहापि दीक्षाकृतिवत् चाङ्गल्यनन्तर मङ्गुल्यादिसमञ्चनस्य कर्त्तव्यतावगमनञ्च ।

अथ मदन्त्युपस्पर्शनपूर्वकराजाप्यायनविधि । तत्र चाशुब्दियपदार्थक्रम विषये ब्रह्मवादिचोद्योदाहरणम्, आप्यायनप्रशंसनम्, विशेषतस्तस्य सारघ मधुकल्पनया गतसारत्वपरिहाराद्यात्मना च, प्रशंसनम्, तदाप्यायनमन्त्रव्याख्यानञ्च ।

अथ निह्नवविधि । तत्कालनिर्णय, तन्मन्त्रविधिव्याख्याने च । ततोऽध्वर्युकर्त्तृकप्रैषादिविधानञ्चेति ।

( ३प्र० ५ब्रा० )

अथोपसदिष्टिविधि । तत्र प्रथम तत्कालविधानम्, तदाख्यायिका च । तत प्रधानयागत्रयार्थाज्यग्रहणप्रकारोपदेशादिकम्, उपसदां त्रित्वविधानम्, तत्प्रशंसनम्, तन्मन्त्रत्रयविधानञ्च । ततो द्वादशोपसत्पक्षे कर्त्तव्यविधानादिकञ्चेति ॥

---

( ४प्र० १ब्रा० )

अथ वेदिनिर्माणविधि । तत्र स्थाननिरूपणम्, वेद्या श्रोणिद्वयप्रमाणम्, आयामस्य पश्चाद्भागावधिप्रदर्शनम्, प्राचीनावधिप्रदर्शनम्, अंसद्वय-

निरूपणम्, पश्चान्मानप्रशंसनम्, प्रागायामेयत्तानिर्द्धारणम्, श्रोणिभाग-स्योरुत्वविधानम्, अंसभागस्य ह्रस्वत्वविधानञ्चेति।

अथोत्तरवेदिनिर्म्माणविधिः। तत्रोत्तरवेद्याधारणविध्यर्थाख्यायिका, तद्विधानञ्च। तन्मानादिसाधनद्रव्यविधानम्, तत्प्रसङ्गात् कश्चिन्नियम-विधिश्च। ततश्चात्वालनिर्म्माणप्रकारोपदेशः, तत्र खातायाः मृदश्चात्वाला-दुत्तरवेदिं प्रति चतुर्हरणस्य विधानम्, ततोऽनुव्यञ्जनम्, तन्मन्त्रस्य तात्पर्याख्यानम्, वेद्या अद्भिरभ्युक्षणम्, तत्र सिकताप्रकिरणम्, तथोत्तर-वेदेर्ह्रियसक्थाख्यया प्रच्छादनविधिश्चेति।

( ४प्र० २ब्रा० )

अथोत्तरवेद्या अग्निप्रणयनप्रयोगविधिः। तत्रेध्माभ्याधानम्, इध्ममात्र-स्याथ उपयमन्युपयमनादिकम्, प्रोक्षण्यादानम्, निनयनम्, तन्मन्त्रे विशेष-विधानम्, आघारणानि, परिधीनां परिधानञ्चेति।

( ४प्र० ३ब्रा० )

यज्ञभूमेः पुरुषाकारत्ववर्णनम्। हविर्द्धानप्रवर्त्तनाभ्यनुज्ञापनाय सावित्र-होमविधिः, तन्मन्त्रव्याख्यानञ्च। ततोऽक्षधुरो पत्न्याः समञ्जनम्। ततः प्रतिप्रस्थातुः उत्तरहविर्द्धानस्य दक्षिणवर्त्तन्यां हिरण्याधानपूर्वकं चतु-र्गृहीताज्यहोमविधानम्, हविर्द्धानयोः प्रवर्त्तनकाले मन्त्रवाचनम्, तत्तात्प-र्य्याख्यानञ्च। ततो हविर्द्धानयोः स्थापनस्थाननिर्णयः, तत्र स्थापनानन्तरं तयोः क्रमादभिमन्त्रणे उपस्तम्भनमेथ्युपनहनच्छदिर्निधानानि, छदिर्निधान-मन्त्रस्याधियज्ञपरतया व्याख्यानञ्च। ततो रराट्युपस्पर्शनम्, सूचीसम्बद्धया रज्ज्वा तत्सीवनम्, तत्र ग्रन्थिकरणम्, तदभिमर्शनञ्चेति।

( ४प्र० ४ब्रा० )

अथ सोमाभिषवार्थोपरवखननविधिः। तत्र प्रथमं तत्खननस्य प्रयो-जनद्वयाख्यानम्, ततस्तत्खननाय अभ्र्यादानादिकम्, चतुर्णां खातानां

चत्वारो मन्त्रा, म्टदुलारणम्, खननप्रमाणम्, खातावमर्षनञ्च। ततोऽध्वर्युयजमानयोर्मिथो हस्तसम्मर्षनम, अवटप्रोक्षणम्, अवटेषु प्रोक्षणीप्रेधावनयनप्रशंसनम्, तेषा मवटाना मुपरि बर्हिराच्छादनञ्च। ततोऽधिषवणफलकयोरुपधानम्, पर्यूहनम्, परिदृंहणम्, परिकर्त्तनञ्च। ततस्तदुपरि अधिषवणचर्म्मस्थापनम्, तत्र ग्राव्णा निधानञ्चेति।

( ४प्र० ५ब्रा० )

अथौदुम्बरीविधि। तत्र प्रथम तस्य सदोमध्ये स्थानविकल्पणम्, ततोऽवटखननार्थं सम्भ्यादानम्, अवटपरिलेखनम, तत्खननम्, तत्रावटप्रागदेशे चौदुम्बर्या स्थापनम्, बर्हिर्भिस्तस्याच्छादनञ्च। तत औदुम्बरीप्रोक्षणसाधनाना मपा यवसाहित्यविधानम्, ताभिस्तत्प्रोक्षणम्, प्रोक्षणीशेषस्योदकस्य तत्रावटेऽवनयनम्, तदुपरि बर्हिरास्तरणञ्च। तत औदुम्बर्या उच्छ्रयणम्, अवटमध्ये प्रक्षेपणम्, पर्यूहणम्, पर्यूषणम्, अपा सुमनिनयनञ्च। ततस्ता मभिमृश्य यजमानवाचनम्, होमविधानम्, तद्धोममन्त्रव्याख्यानञ्च। ततस्तत्र छदिर्निधानम्, छदिषा नवसङ्ख्यात्वेन प्रशंसनञ्चेति।

अथ सदोनिर्म्माणादिविधि। तत्र प्रथम सदस उदगायततत्वविधानम्, सदोनिर्म्माणप्रकारोपदेश, सदस परिश्रयणम्, तन्मन्त्रव्याख्यानम्, तत सदसो द्वारशाखादीना सीवनादिविधानञ्च। ततस्तत्र प्रथम माग्नीध्रस्य स्थाननिर्णय, आग्नीध्रस्यार्त्तिपरिहारहेतुत्वेन प्रशंसनञ्चेति॥

---

( ५प्र० १ब्रा० )

अथ धिष्ण्यविधि। तत्र प्रथम सोमयागैकादशत्वाख्यानम्, तद्दृष्टान्तमुखेन सोमयागस्यातिकर्तव्यताप्रतिपादनाय पुरुषस्य त्र्यवयवयुक्तत्वाभिधानम्, ततो धिष्ण्याना सोमरक्षकत्वाभिधानम्, प्रसङ्गात् सोमयागस्य देवमनुष्यपितृद्वारेण सर्वजगत्स्थितिहेतुत्ववर्णनञ्चेति।

( ५प्र० २ब्रा० )

अथ वैसर्जनहोमविधिः। तत्र प्रथम मग्नीषोमीयप्रयोगविधानम्। तच अग्नीषोमीयाज्यपृषदाज्ययोर्ग्रहणस्य विधानादिकञ्च। तत आहवनीये वैसर्जनहोमविधानम्, तन्मन्त्रतात्पर्यकथनम्, पूर्वोक्तेआग्नीध्रमनादीनामतिदेशनम्, प्रैषवैकल्पस्याभिधानञ्च। ततो ग्रावादीनां सम्भाराणां माग्नीध्रे समुपस्थापनम्, तदायतु मन्त्रवाचनादिकम्, अध्वर्योरिध्मप्रोक्षणादिकम्, तुरीयवैसर्जनहवनञ्च।

अथोत्तरवेदेः पश्चाद्देशे बर्हिषि तृण आसाद्य हविर्धानस्य प्रवेशनविधिः। तत्र दक्षिणहविर्धानस्य परिश्रते मध्यप्रदेशे कृष्णाजिनस्योपरि सोमनिधानम्, तदुपस्थानम्, ततो हविर्धानप्रदेशात् निष्क्रमणञ्च। तत आहवनीये समिदभ्याधानम्, प्रसङ्गाद् दीक्षिताग्निभोजनपानप्रहणयोर्वैसर्जनहोमं यावत् निषेधश्चेति।

( ५प्र० ३ब्रा० )

अथ यूपनिर्म्माणविधिः। तत्र प्रथमं यूपं छेत्स्यन्नाहवनीये होम, ततः क्षुद्रतरवृक्षेण संवेश्य तत्काष्ठस्य छेदनम्, प्रथमच्छिन्नस्य शकलस्य यूपावटे प्रक्षेपार्थं ग्रहणञ्च। ततो यूपस्याधःपातने प्रागादिदिक्त्रयविकल्पनम्, पच्यमानस्य तस्यानुमन्त्रणम्, तदैवात्रखननहोमविधिस्तत्प्रशंसनञ्च। अनेन यूपमानस्य बहुविकल्पविधानम्, यूपस्याष्टाश्रितविधानञ्चेति।

( ५प्र० ४ब्रा० )

अथ यूपस्थापनविधिः। तत्र प्रथम मवटनिर्माणार्थे मभ्रिग्रहणम्, यूपशकलस्यावटे स्थापनम्, शकलप्रासनहोमश्च। ततो यूपाञ्जनम्, चषालप्रतिमुञ्चनम्, अग्निष्ठाञ्जनम्, यूपोच्छ्रयणम्, यूपमानम्, तन्मन्त्रस्याधियज्ञपरतया व्याख्यानम्, यूपपर्यूहणम्, यूप मन्वारभ्य मन्त्रस्य वाचनम्, तन्म-

न्त्रस्य तात्पर्याख्यानञ्च। ततस्तथालोदीच्यणम्, तन्मन्त्रतात्पर्यान्वाख्यानञ्च। ततो रशनापरिव्ययनम्, तथा यूपशकलावगूहनम्, स्वरुनामनिर्वचनञ्च। ततो लोकत्रयजयात्मना यूपस्य प्रशंसनम्, यूपपूर्वार्द्धमानादिकथनम्, यूपस्याद्यश्रित्वाभिधानम्, यूपे निगूढस्य स्वरोस्तत्रत्र प्रतिपत्तिकर्म्मत्वेन यूपप्रतिनिध्यात्मना होमस्याभिधानञ्चेति।

( ५म० ५ऋ० )

अथ यूपैकादशिनीविधि। तत्र प्रथमं तदुपोद्घातः, इत्योनाद्यकत्वेनोपपश्यप्रशंसनम्, उपशयनिधानम्, अमित्रप्रमुखाणां सर्वेषा मेव यूपाना मेकस्य वोच्छ्रय मिति विचारश्च। ततो एकादशिनीमध्ये यूपोच्छ्रयक्रमसिद्धान्तादि, प्रसङ्गात् पात्नीवतपशुप्रयोगविधानञ्चेति।

( ५म० ६ऋ० )

अथ पशूपाकरणविधि। तत्र प्रथमं पशुनियोजनाय यूपस्य कर्त्तव्यताख्यायिकार्थाख्यायिका। ततोऽग्नीषोमीयपशोर्यूपे नियोगादिविधानम्, तत सार्थवादोपाकरणविधानञ्चेति॥

---

( ६म० १ऋ० )

अथ पशुपाशविधि। तत्र प्रथमं पशोर्बन्धनाय पाशकरणम्, तन्मन्त्रतात्पर्याख्यानञ्च। ततस्तस्यैव पशो प्रोक्षणम्, उपोक्षणम्, ललाटाञ्जनञ्च। ततो शुक्लमभतो सादनम्, प्रवराश्रावणम्, पुनराश्रावणम्, यज्मानप्रवरनिगदार्थान्वाख्यानञ्चेति।

( ६म० २ऋ० )

अथ पशुसञ्ज्ञपनप्रयोग। तत्र प्रथमं होतुर्हौत्यसदने उपवेशनविधानम्, प्रयाजविधि, तदेकादशत्वविधानादिकञ्च। तत्र आप्याकाभ्यां

यूपशकलाभ्यां पशोर्ललाटोत्सर्जनादिविधानम्, पशो पर्यग्नीकरणविधिश्च। तत आग्नीध्रप्रतिप्रस्थात्रध्वर्युयजमानानां शामित्रप्रदेशगमनस्य विधानम्, अध्वर्योस्तृणादयग्रहणादिविधि, मैत्रावरुणप्रैषविधि, अध्रिगुप्रैषविधानम्। ततो विशसनप्रदेशेऽध्वर्युकर्तृकतृणास्तरणादिविधानम्, सञ्ज्ञपनप्रकारविधानञ्चेति।

( ६प्र० ३ख० )

अथ पत्नीकर्मविधि। तत्र प्रथमं सञ्ज्ञप्ते पशौ पत्नीवाचनम्, तन्मन्त्रतात्पर्याख्यानञ्च, तत पशोः प्राणमुखमासावचक्षुरादीना पत्न्या प्रक्षालनादिकञ्च।

अथ पशुवपोत्खेदविधि। तत्र प्रथमं वपाश्रपण्यो कार्श्यमयत्वविधानम्, तस्या परिवासनादिकञ्च। ततो वपायागप्रकारोपदेश, वपानुप्रासनम्, वपायागप्रशंसा चेति।

( ६प्र० ४ख० )

अथ पशुपुरोडाशविधि। तत्र पशुपुरोडाशस्य देवताविधानम्, तदानन्तर्यप्रशंसा च। ततो शमितुः पशुविशसनम्, शमितृसंशासनञ्च। तथाग्नेः हृदयाभिधारणम्, अवदानक्रमविधानादिकम्, प्रसङ्गात् मनोतानामनिर्वचनञ्च। ततो वसाहोमविधानम्। ततो वनस्पतियागविधानम्, स्विष्टकृत्प्रयोगप्रकाराख्यानञ्च। ततो वसाहोमशेषेण दिग्व्याघारणम्, पशोः सम्मर्शनम्, तन्मन्त्रव्याख्यानञ्चेति।

( ६प्र० ५ख० )

अथोभयाजविधि। तत्रैकादशप्रयाजा, एकादशानुयाजा, उपयाजाश्चैकादश इति पशोस्त्रीण्येकादशानीत्यादीनां विधानम्, अथानुयाजार्थपृषदाज्यग्रहणविधानञ्च। विहितानामनुयाजानामुपरिष्टात् पुर-

स्ताश्चोपयाजप्रशंसनम्, उपयाजनामनिर्वचनम्, उपयाजमन्त्राणामन्वाख्यानम्, प्रतिमन्त्रं प्रतिवषट्कारं तद्धोमविधानञ्च। ततोऽप्युपयाजनामकानां चतुर्णामुपयाजानां विधानादिकञ्चेति।

---

( ७प्र० १ब्रा० )

अथ तदप्युपयाजमन्त्राणां व्याख्यानानि। ततो जाघन्या पत्न्याः संयाजविधानम्। ततो हृदयशूलेनावभृथगमनम्, परिकर्म्मिणो तद्धृदयशूलसमर्पणम्, तन्निगूहनम्, तदभिमन्त्रणम्, विषयविशेषे तच्छूलोपगूहननिषेधश्चेति।

( ७प्र० २ब्रा० )

अथ पश्वेकादशिनीविधानाख्यायिका। तत एकादशिनीनां पशूनां क्रमविधानम्, अथ तेषा मुदङ्नयने, निविन्धने, वपाप्रचारे च तत्क्रमस्यैवातिदेशविधिश्चेति।

( ७प्र० ३ब्रा० )

अथ वसतीवरीग्रहणविधिः। तत्र प्रथमं माख्यायिकाख्यानम्। ततो वसतीवरीग्रहणार्थं गमनविधानम्, गृहीतानां तासां मपां सवनत्रयार्थं विभजनविधानम्, गृहीतयाणां च गुणसमर्पणम्, ततो वसतीवरीग्रहणकालनिर्णयादिकम्, तन्मन्त्रविधानम्, तद्व्याख्यानञ्च। ततस्तदासादनम्, सर्वत्र परिहरणस्योत्तरवेदेरपरिहरणस्य च प्रशंसनम्, उत्तरश्रोणित-श्चादाय आग्नीध्रमण्डपे तत्सादनम्, एतत्प्रसङ्गाद् वसतीवरीशब्दनिर्वचनादिकञ्च। ततो वसतीवरीग्रहणप्रभृतीनां माग्नीध्रसादनान्तानां मन्त्राणां सप्तसङ्ख्याकत्वेन प्रकीर्तसम्पत्त्या प्रशंसनञ्चेति।

( ७प्र० ४प्रा० )

अथ सवनीयपश्वर्थप्रयोगविधि । तत्र प्रथम सोमोपावहरणम्, तन्मार्गनिरूपणम्, तन्मन्त्रविधानम्, तद्व्याख्यानञ्च। तत उपावहृतस्य सोमस्योपस्थानञ्चेति ।

अथ प्रातरनुवाकप्रयोगविधि । तत्र प्रथम प्रातरनुवाकस्य समयैककालनिर्णय, प्रातरनुवाकस्य तत्प्रतिगरविषये मतान्तरोपन्यास, समिदाधानञ्च । तत एकधनानयनार्थं होमविधानम्, तद्धोममन्त्र, तद्व्याख्यानञ्च । ततश्चतुर्णां प्रैषाणां विधानम्, तद्व्याख्यानञ्च । होत्रादीनामेकधनानयनार्थं मार्गनिरूपणम्, तद्व्याख्यानाख्यानञ्च । तत प्रचरणीप्रदहीतस्याज्यस्याप्सु होमविधानम्, तन्मन्त्रविधि, तद्व्याख्यानञ्च । ततो हुतायां आहुत्या अपसार्यादिकम् । मैत्रावरुणचमसेनोन्नयनम्, तत्र विचारश्च । ततोऽप्सुम्भरणानन्तर तेषा मेव होमादीनां देवयजने पुनरागमनविधानम्, तत आग्नीध्रहस्तस्थ होतृचमस मध्वर्युरादाय निग्राभ्यासु आवनार्थं पूर्वैराहृता वसतीवरीर्गृह्णीयादिति विधानञ्चेति ।

( ७प्र० ५प्रा० )

अथ सोमाभिषवप्रयोगविधि । तत्र प्रथम दारुमयफलकयोरुपरि पर्युपवेशनम्, अध्वर्योर्ग्रावादानम्, तन्मन्त्रविधानम्, तस्य व्याख्यानञ्च । ततो वाग्यमनम्, सोमोन्मानम्, तत्संख्याविधानम्, सोमाभिमर्शनम्, निग्राभ्योदकैः सोमसेचनम्, प्रसङ्गात् निग्राभ्यशब्दनिर्वचनम्, सोमोपसर्जनम्, निग्राभ्यासिञ्चनम्, सोमप्रहरणम्, तन्मन्त्रविधानम्, तस्य व्याख्यानञ्च । एव त्रिरभिषवणम्, त्रि सम्भरणम्, त्रि सन्निर्मोदनम्, मन्त्रजपश्च । ततो निग्राभ्योपायनम्, प्रसङ्गाद् यज्ञनामनिर्वचनम्, सोमप्रार्थनारूपो मन्त्रसंवादश्च । अथ निग्राभ्याभ्यो होतृचमसेन ग्रहाणां ग्रहणोपक्रमविधानञ्चेति ।

# ॥ अथ सर्त्तव्याख़ोच्यवचनसूची ॥

"अग्निं मथित्वाऽग्नावग्निं जुहवाम" ५ ६ ४ ५, ६।
"अग्निरु वै यज्ञ' ५ ४ १६
'अग्निरेतस वै हिरण्यम्' २ ४ ३ २ ५ २, ७ ५ १।
"अग्निरेव देवानां गूत आस, सहरक्षा इत्यसुररक्षस मसुराणाम्" ५ १ २१
'अग्निश्चाग्निश्च" २ १ ७
"अग्निर्वा अह, सोमो रात्रि, अथ यदन्तरेण तद् विष्णु, एतद्वै परिप्लव-
मान संवत्सर करोति" ३ ५ १५
"अग्निर्वै गायत्री" ७ ५ १० [२ ६
"अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापति, स उ एव यजमान" ७
"अग्निर्वै यज्ञ' ३ ४ १६
"अग्निर्वै सर्वा देवता" १ २ १
"अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति' १ २ १६
'अग्निर्हि रक्षसा मपहन्ता" ६ २ ६
"अग्निर्ह्येव ब्रह्म" २ १ ६
'अग्निर्ह्येव यज्ञ" २ १ ६
"अग्ने नय सुपथा राये •–• इत्यग्नि मेवैतत् पुरस्तात् करोति' ५ २ ११
"अग्नेर्वा एतद् वैश्वानरस्य भस्म यत् सिकता" ४ १ २६
"अङ्गानि वै विश्वानि धामानि" ३ १ १४
'अथ देवा वीणा मेव हस्ता वादयन्तो निगायन्तो निषेदुरिति वै ते वय
गास्याम इति त्वा प्रमोदयिष्यामह इति" २ ३ ६
'अथ पुनरेत्याहवनीय मभ्यावृत्यासते। नेदस्य सञ्ज्ञप्यमानस्याध्यक्षा
असामेति। तस्य न कूटेन प्रघ्नन्ति मानुषं हि तत्। नो एव
पश्चात्कर्णं पितृदेवत्य हि तत। अपि ग्रन्था वैव मुख तमयन्ति,

वेध्क वा कुर्वन्ति तत्। माह जहि मारयेति, मानुष हि तत्" ६. २. १४.

"अथ यत् पुरा नाश्नन्ति, यथा हविषोऽहुतस्य नाश्नीयादेव तत्, तस्माद् दीक्षितस्य नाश्नीयात्" ५. २. २१ [२४.

"अथ यद्दीक्षितोऽनृतं वा भाहरति, क्रुध्यति वा तन्मिथ्याकरोति" २. १.

"अथानडुहावाजन्ति, तौ यदि हर्यौ स्यातां मन्यतरो वा हर्यस्तत्र विद्याद् वर्षिष्यत्येषम पर्जन्यो वृष्टिमान् भविष्यतीत्येतद्‌ विज्ञानम्" १. १. ११

"अथाभयेनानाद्गे या पशु नयन्ति, त वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते, प्रतिप्रस्थातार मध्वर्यु, मध्वर्यु यजमान । तदाहु,— नैष यजमानेनान्वारभ्यो मृत्यवे ह्येनं नयन्ति, तस्मान्नान्वारभेतेति । तदन्वारभेत, न वा एत मृत्यवे नयन्ति, यं यज्ञाय नयन्ति" ६. २. १०.

"अथैभ्य सूर्य दक्षिणा मानयन्, तं प्रत्यगृह्णन्" ४. १. १९

"अथोल्लिखति सुसस्या कृषीकृधीति" १ ५. ३०

"अध्वर्यु पृच्छति,— यजमान! कि मवेति, भद्र मित्याह; तन्नौ सहेत्युपाश्वध्वर्यु । ०—० यजमान पृच्छति,— अध्वर्यो! कि मवेति, भद्र मित्याह, तन्म इति यजमान" ७. ४. १७

"अनिम्यस्य ह्यतो नापक्रामेत्" ४. १. १७.

"अनृतं हि वदेयुरेकं ह वै देवा व्रतं चरन्ति सत्य मेव, तस्मादेषा जित मनपजय्यं, तस्माद्यश । एवं ह वा अस्य जित मनपजय्य मेवं यशो भवति, य एव विद्वान्सत्यं वदति" ३. २ ८.

"अन्तरिक्षं वा अनु रक्षश्चरत्यमूल मुभयत परिच्छिन्नं, यथायं पुरुषोऽमूल उभयत परिच्छिन्नोऽन्तरिक्ष मनुचरति। तद् वातेनैनं सविदानान्तरिक्षाद् गोपायेत्येवैतदाह यदाहोरोरन्तरिक्षात् सजूर्देवेन वातेनेति (वा० सं० ६. ११. २.)" ६. २. १२

"अन्न वा ऊर्गुदुम्बर" ३. १. २७.

"अन्नं वै क्षत्रियस्य विट्" २. ५ ८

"अन्न वै सोम" ७ २ ८, ६.

"अन्न सोम" ३. १ २८

"अमूल वा इद मुभयत परिच्छिन्नं रक्षोऽन्तरिक्ष मनुचरति, यथाय पुरुषोऽमूल उभयत परिच्छिन्नो ऽन्तरिक्ष मनुचरति" ६. १. १५.

"अमृत मायुर्हिरण्यम्" ६. ४. २६.

"अमृता ह्याप" ७. ५. १६.

"अमेध्यो वै पुरुषो यदनृत वदति" १. ३. १८.

"अयं (मासम्) रसोऽयमानो न क्षीयते" ६. ४ ३०.

"असि वै प्राण इत्याचक्षते" ६. २. ४.

"असुर्या वा एषा वाग् या वाचे, नेदिहासुर्या वाग् वदात्" ४. ३. १०

"अस्य सर्वस्य ब्राह्मणो मुखम्" ७. २. १४.

"अस्य सलिलस्य मध्ये ऽश्व श्वेत स्थाणौ सेवते (अस्यार्थ —) वेदिर्वै सलिल •—•, अग्निर्वा अश्व श्वेतः •—•, यूप स्थाणु. •—•। तस्य वाणो न्यचक्षित मधु वाणो धुनोति •—•। (अस्यार्थ —) रसना हैव सा" ५. १. ४, ५.

"आत्मानं वै स्तोत्रेण दियसौ सोमक्रं देवेभ्य आत्मान निष्क्रीणीष्वेति" [५. १. ८.

"आत्मा वै मनो हृदयम्, प्राण एवदाज्यम्" ६. ४. ८.

"आधीतयजू षीत्याचक्षते" १. ४. ११, १४

"आपो रेत" ७. १. १.

"आपो वै प्राणा" ६. ३. ४.

"आपो वै यज्ञ" ७. १. १.

"आपो वै समुद्र" ६ ५. ११.

"आपो वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति, तस्मादाप एतावति भोगे मुज्यमाने न क्षीयन्ते" ७ ४ २७.

"आपो ह वा ओषधीना रसस्तस्मादोषधय केवल्य खादिता न धिन्वन्ति,

ओषधय उ हाया रसस्तस्मादामः पीताः केवल्यो न धिन्वन्ति ; यदेवोभय्य संसृष्टा भवन्त्यथैव धिन्वन्ति, तर्हि सा सरसा भवन्ति" ४. ५. ७.

"आपो ह वै रसं जम्बस्तेनैवैतद्वीर्येणापः स्यन्दन्ते" ७. ५. २५.

"आसीनं वा एत मेष आगच्छति ; स आगत उत्तिष्ठति, तन्मिथ्या-करोति" २ ६. १३.

"इदं हि यदा वर्षत्यथौषधयो जायन्ते, ओषधीर्जग्ध्वाप पीत्वा तत एष रसः सम्भवति रसाद्रेत, रेतस पशवः ; तद् यत एव सम्भवति, यतश्च जायते, तत एवैतन्मेध्यं करोति" ६. १. ४.

"इदं ह्याहुरिन्द्रो यजमान इति" ३. ३. १५.

"इन्द्र सर्वा देवताः" ३. ३. २.

"इन्द्रश्रेष्ठा देवा" ३. ३. २

"इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दि-न्नहल्यायै जारेति (श० ब्रा० १. १. २. )। तद्यान्येवास्य चरणानि, तैरेवैन मेतत् प्रमुमोदयिषति" ३. १. १८

"इन्द्राग्नी हि विश्वे देवा" १. ३. १४.

"इन्द्रियं वीर्यं मिन्द्र" ७. २. १६.

"इन्द्रियं वै वीर्यं मिन्द्र इन्द्रियेणैव तद्वीर्येण" ७. २. १५.

"इन्द्रो वै यज्ञस्य देवता" ३. ४. १८ ; ५. ४. १० ; ७. ५. ५.

"इमा प्रजा पुनरभ्यावर्त्त प्रजायन्ते" ६. ५. १८.

"इयं वा अदितिः •—• ऊर्द्धा ह्येतस्यै दिक्" २. २. १६.

"इयं वै पृथिवी पूषा" २. ३. १६.

"इयं वै पृथिव्यग्निर्वैश्वानरः" ७. १. ४.

"इयं वै पृथिव्यदिति" ७. ४. ४.

"इयं वै पृथिव्यदितिः सेयं प्रतिष्ठा" ७. १. १.

"इयं ह्येवादितिः" २. २. ६.

"उत्तानेव वै योनिर्गर्भं बिभर्त्ति" १. ५. २६.
"उदीचीमेव दिशम् पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तरा हि वाग्
वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीची ह्येतया दिशं प्राजा-
नन्नुदीची ह्येतस्ये दिक्" २. २. १५.
"उदीची वै मनुष्याणां दिक्" ४. ५. २६.
"उदीची हि मनुष्याणां दिक्" २. ३. २२.
"उर्वशी वा अप्सरा, पुरूरवा पति, अथ यत् तस्मान्मिथुनादजायत
तदायुरेव" ३. २. २२.
"उष्णीषं माहरेति" २. ५. ३.
"उष्णीषेण विग्रथ्नाति •—• अथ मध्येऽङ्गुल्याकाशं कारोति" २. ५. १८.

"ऋणं ह वै पुरुषो जायमान एव स्वयोरात्मना जायते" ५. १. १६.
"ऋषिणाभ्यनूक्तम्— 'मनसा सङ्कल्पयति, तद्वात मपि गच्छति। वातो
देवेभ्य आचष्टे, यथा पुरुष ते मन'–इति" ३. ३. ७.

"एकं ह वै देवा व्रतं चरन्ति सत्य मेव, तस्मादेषा जित मनपजय्यं, तस्मा-
द्यशः। एवं ह वा अस्य जित मनपजय्य मेवं यशो भवति, य एवं
विद्वान्सत्यं वदति" ३. ३. ८.
"एको ह्येवायं पवते सोऽय पुरुषेऽन्तः प्रविष्टस्त्रेधा विहित, प्राण उदानो
व्यान इति" १. ३. २०.
"एतद्व्याख्यानं सौपर्णीकाद्रवम्" ५. १. ७.
"एतावान् वै पुरुष" १. ४. २३
"एते गन्धर्वा सोमरक्षा गुप्तपरिमे धिष्ण्या इमा होत्रा" ५. १. ८.
"एते वै पवितारो यत् सूर्यस्य रश्मयः" १. ३. २२.

"एष वा यज्ञेन्द्रो भवति यद्यजमान" २. ६. १०.
"एष वा इन्द्रो य एष तपति" ३. ३. १५.
"एष वै प्रजनयिता यस्मुष्कर" ५. ५. ८.
"एष वै सविता य एष तपति ०—० प्रतीचो ह्येतस्य दिक्" २. २. १८.

"कः प्रातरनुवाकस्य प्रतिगर इति, आग्नीध्रैवाध्वर्युमुपासीत, स यन्निमिषति च चैवास्य प्रतिगरः; तदु तथा न कुर्याद्, यदि निद्रायादपि कामं स्वप्यात्" ७. ४. ११.
"किं तद् यज्ञे क्रियते येन प्राणा सर्वेभ्योऽङ्गेभ्य ध्रिय इति" ६. ५. २.
"क्षत्रं वा इन्द्रः" ७. २. १६, १८.
"क्षत्रं वै सोम" ७. ४. २.
"क्षत्रं वै सोमो विडन्या ओषधय" २. ५. ८. [७. ४. ७.
"क्षत्रिय मायत्त मिमा प्रजा विश प्रत्यवरोहन्ति त मधस्तादुपासते"

"गर्भो वा एष भवति यो दीक्षते" २. ६. १२.
"गृहा वै पत्न्यै प्रतिष्ठा" २. ३. १०.

"चक्रं ते, वस्त्रं ते, छाया ते, धेनुस्ते, मिथुनौ ते गावौ, तिस्रस्ते-ऽन्याः" २. ६. ३.

"तं (सोमं) वै दशभिरेव क्रीणीयाद्द्वादशभिः" २. ६. १८.
"तत् (त्वाष्ट्रं पशुं) न संस्थापयेत्, पर्यग्निकृत मेवोत्सृजेत्" ५. ५. ८.
"तदाहुः। नोपाकुर्यान्नाग्निं मन्थेद्, रशना मेवादायाभ्यासोपपरेत्याभिधाय नियुञ्ज्यादिति। तदु तथा न कुर्याद् यथाधर्मं तिरश्चया चिकीर्षेदेवं तत्। तस्मादेतदेवानुपरीयात्" ५. ६. ७.
"तदु ह याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहार,— एवं कुर्वन्तं प्राणं वा अय

मन्तरतादध्वर्युं प्राश्य एन हास्यतीति, स ह स्म बाहू अन्ववेक्ष्याह,— इमौ पलितौ बाहू क्वस्विद् ब्राह्मणस्य वचो बभूवेति न तदाद्रि-वेत" ६. ३. २५.

"तद्विष्णाना ब्राह्मणे व्याख्यायते सौपर्णीकाद्रव यथा तदास" २. १. १.

"तद्धै वयसा मोजिष्ठ बलिष्ठ यच्छ्रेष्ठेन" ३ १. १५.

"तपसा वै लोकं जयति। तदस्यैतत् पर पर एव वरीयस्तमो भवति, पर-पर श्रेयस लोक जयति" ३. ५. २०.

"तपसो ह वा एषा प्रजायते सम्भूता यदग्नि" २. ६ ८

"तस्मादप्येतर्हि •—• घोषा •—• य एव नृत्यति, यो गायति, तस्मिन्ने-वैता निमिश्लतमा इव" २. २ ६

"तस्मादाहु पुण्यलोक ईजान इति" ५ १. १५

"तस्माद् योऽप्येतर्हि चेधा सहस्र व्याकुर्यादेकैवातिरिच्येत" २. ४. १३.

"तस्य यन्निखात, तेन पितृलोक जयति, अथ यदूर्ध्वं निखातादा रशनायै, तेन मनुष्यलोक जयति, अथ यदूर्ध्वं रशनाया आ चषालात्, तेन देवलोकं जयति; अथ यदूर्ध्वं चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वा, साध्या इति देवास्तेन तेषा लोक जयति" ५. ७. २५.

"तस्य हि न हन्तास्ति न वधो येनेद सर्वं मास्यत तस्मा विश्वा भुवनानि समाहितिं" ३. १. ३. '

"तस्यै गन्धर्वा वेदानेव प्रोचिरे इति वै वय विद्मेति वय विद्मेति" २. ३. ५.

"तस्यैवैतत् प्रायश्चित्तिं कुरुते, सोऽग्निनैव तमं विपल्यप्नुयते" ३. ७. २, ३

"तिर इव वै गर्भा" ३ १. ६.

"तेजो वा अग्नि" ७. २. १६.

"ते (द्यावापृथिवी) रसवत्या उपजीवनीये इमा प्रजा उप-जीवन्ति" ७. ५. २१.

"ते विदुरय वै नो विरचात्तमोऽस्येव रूप मसाम" ३. ७. ८

"तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्त पराबभूवु" १. ५. २३.'

"त्वष्टा वै पशूना मिष्टे" ५. ६. ११.
"त्वष्टा वै सिक्तं रेतो विकरोति" ५. ५. ८.

"दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान् वै पुरुषः" ६. २. ३.
"दिवि हि सोमः" ७. ५. २.
"दीक्षिता राजानं गोपायन्ति, नेन्नोऽपहरानिति" ५. १. १४.
"देवाश्च वा असुराश्चोभये प्राजापत्याः, प्रजापतेः पितुर्दाय मुपेयुर्मन एव देवा उपायन् वाच मसुराः" १. ५. १८.
"देवो वै सोमः" ७. ५. २.
"देवो वै सोमो दिवि हि सोमः" २. ४. १२.
"देव्यो ह्यापः" ७. ४. २५.
"दैव्यो वा एता विशो यत् पशवः" ५. ६. ६.
"द्वयं वा इदं न तृतीय मस्ति सत्यं चैवानृतञ्च; सत्य मेव देवा अनृतं मनुष्याः" २. ५. २ ; ["सत्यं वै"] ७. ५. १.
"द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननम्, ०—० मिथुन मेवैतत् प्रजननं क्रियते" ६. ५. ७.

"धेन्वनडुहयोर्नाश्नीयात्" १. २. २१.
"धेन्वनडुहयोर्नाश्नीयात्। तदु होवाच याज्ञवल्क्योऽश्नाम्येवाह मंऽसलं चेद् भवतीति" १. २. २१.

"न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ( वा॰ सं॰ ६. ३७. )" [७. ५. २४.
"न दीक्षितः काष्ठेन वा नखेन वा कण्डूयेत" १. ५. २१.
"न प्रतीचीनशिराः शयीत" १. १. ७.
"न ब्राह्मणो सेव्हेत्" १. ५. २४.

"नवाक्षरा वै गायत्री, अष्टौ तानि यान्यन्वाह, प्रणवो नवम" ९.२ १५
"न वै देवा सर्वमेव सवदन्ते" १ १.१०
"न वै देवा स्वपन्ति" २ १ २२.
"न वै यज्ञ प्रत्यक्ष मिवालभे यथाय दण्डो वा वासो वा, परोक्ष वै देवा परोक्ष यज्ञ" १ ३ २५
"न त्वा मर्तीयेरन्, न ह्यता परस्परा मिव भवति, स स्वानमनुव्यवैति, ते प्रिय द्विषता कुर्वन्ति, द्विषद्भ्यो रध्यन्ति, तस्मान्नर्तीयेरन्" ३ १ ३
"न दीक्षित प्रतिगृह्णीयात्, पुरुषाजातो हि स्वसीति" १ १ ४
"नाभिदघ्ना भवति, अत्र वा अन्न प्रतितिष्ठति" ३ १ २८
"नाभिदघ्ना भवति, अधो रत्न रेतस आश्रय" ३ १.२८
"निष्टतदक्षिणा न प्रतिगृह्णीयात्" ४ १ २५
"नैन मन्यत्र चरन्त मभ्यस्त मियात्, न स्वपन्त मभ्युदियात्" २ १ २०
"नो हान्ते गोर्गम स्यात्" १.२ १७

"मध्व वा ऋतव सवत्सरस्य" ७ ५ ११
"पवित्र वा आप" १ २ ११
"पशवो वै पूषा" ७ २ १०, १२
"पशवो वै राय" २ ३ ८
"पशवो वै वसु" ५ ६ ११, १३
"पशो प्राणानद्भि सम्पुपस्पृशति, ०—०, तदस्मिन्नेतान् प्राणान् दधाति, तथैतज्जीव मेव देवाना हविर्भवत्यमृत ममृतानाम्" ६ ३ ४
"पश्चादरीयसी पृथुश्रोणिरिति वै योषा प्रशसन्ति" ४ १ ११
"पितृदेवत्य सोम ०—० दक्षिणा ह्येतस्य दिक्" २ २ १०
"पुमो वै वीर" २.४ १२
"पुरश्चरिरे,— अपसयो मेवास्मिल्लोके, रजता मन्तरिक्षे, हरिणीं दिवि" ३ ४ ३

"मनुष्याननु पशव, देवाननु वयास्योषधयो वनस्पतय" ५ १ १६

"मनो देवा मनुष्यस्याजानन्ति" ३ ३ ६

"महास्त्वेव गोर्महिमेत्यध्वर्युं गोर्वै प्रतिधुक्, तस्यै शृत, तस्यै शरस, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चन, तस्यै नवनीत, तस्यै घृत, तस्या आमिक्षा, तस्यै वाजिनम् •—• एतान्येव दश वीर्याणि" २ ६ २, ३ २ ५ १, ३

"महितो वै सोमो देवो हि सोम" २ ६ ४

"मेध्या वा आप" १ १ १०

"य सर्वासा ओषधीना रस आसीत स पयोऽस्वदधु तस्माद् यत्राऽऽपो ओषधयो ध्यायन्ति, तदेव मोदमाना वर्द्धन्ते" ४ ५ १०

'य इमे ग्रोर्मसावार कृपा इमावप द्वा विमौ द्यौ" ४ ४ १

"यजमानो वा आमिक्षा" ५ ४ १६

'यज्ञो वै विष्णु" ५ २ २, ८

"यज्ञो वै विष्णु । स देवेभ्य इमा विक्रान्ति विचक्रमे येषा मिय विक्रान्ति रिद मेव प्रथमेन पदेन पस्पाराथेद मन्तरिक्ष द्वितीयेन दिव मुत्तमेन" ५ २ ३

'यज्ञो हि कृष्ण, स य स यज्ञस्तत कृष्णाजिनम्" १ ५ २८

"यज्ञो हि विष्णु" ५ २ १६

'यत् ते सोम दिवि ज्योतियत् पृथिव्या यदुरावन्तरिक्षे •—• स एता सिसचक्रमूरेषु लोकेषु विन्यधत्त" ७ ५ १२

'यत् नैककुद भवति चक्षुष्येवैतच्चक्षुर्दधाति" १ ३ १२

'यत्र वा अर्हन्त मागत नापचायन्ति क्रुध्यति वै स तत्र तथा ह्यपचिता भवति" ३ २ ३

"यथा राज्ञ आगतायोदक माहरेदेव मेतदिति" ३ १ ३१

"यथा राज्ञे वा ब्राह्मणाय वा महोक्ष वा महाज वा पचेत्, तदह मानुष हवि" ३ २ २

"यथा राज्ञोऽराजानो राजकृत सूतग्रामण्य, एव मस्य छन्दास्यभित साधयानि" ३. २ ७.

"यथा वा यस्काररोऽग्निना स्नात स्यात्" ७. ४. २६.

"यदग्नौ जुहोति, तद्देवेषु जुहोति, तस्माद् देवा सन्ति। यत् सदसि भक्षयन्ति, तन्मनुष्येषु जुहोति, तस्मान्मनुष्या सन्ति। अथ यद्धविर्धानयोर्ग्रावाणः सीदन्ति, तत् पितृषु जुहोति ; तस्माद् पितरः सन्ति" ५. १. २५

"यदा वै स्त्रियै च पुंसश्च सन्तप्यतेऽथ रेत सिच्यते, तत् तत प्रजायते, पराङ्मुखमक्षि पराङ्ग्येव रेत सिच्यते" ४. ३. १६.

"यदि दीक्षित मार्त्तिविन्देद् येनैवात कामयेत तेन भिषज्येद् यथाव्रतेन भिषज्येदिति" २. १. १५.

"यद् गायत्री श्येनो भूत्वा दिव सोम माहरत्, तेन सा श्येन सोमभृत्" ७. ५. २०

"यद्वीद किञ्चाप्रत्युद एवेद सर्व प्रतितिष्ठति" ४. ५ १.

"यद्वै प्रतिरूपं तच्छिल्पम्" १. ४. ५.

"यद्वै शुक्लं यज्ञस्य, तदाग्नेयम् , ०—० यदा चार्द्रं यज्ञस्य, तत् सौम्यम्" २. २. ८, १०.

"या प्रोक्षण्यः परिशिष्यन्ते ता च्यवटे च्यवनयति,—'शुन्धन्तां लोका पितृषदना इति ; पितृदेवत्यो वै कूप खात" ५. ४. ६.

"या ते धामान्युश्मसि गमध्यै ०—० इत्येतया त्रिष्टुभा मिनोति" ५ ४. १५.

"यावती वै वेदिस्तावती पृथिवी" ५. ५. १.

"यावद्ध्येव प्राणेन प्राणिति, तावद् पशु , अथ यदास्मात् प्राणोऽपक्रामति, दार्वेव तर्हि भूतोऽनर्थ्यो शेते" ६. ४ ५.

"यूप एव पशु माणभन्ते, नर्ते यूपात् कदाचन" ५. ६. २।

"ये वै ब्राह्मणा शुश्रुवांसोऽनूचानास्ते विप्रा" ४. ३. १२.

"यो दीक्षते तस्य हिरिषाम इवात्मा भवति" ६. २. २.

"यो दीक्षते, स विष्णुर्यजमानस्य" १. ५. १७.

"यो दीक्षते स देवाना मेको भवति १. १. ८, १०, २. १. १६, २९.

"यो न्वेवेम मानुषं ब्राह्मणं हन्ति स न्वेव परिचक्षते" ७. ५. १७.

"यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण
इत्येव ब्रूयात् ब्राह्मणो हि जायते यो यज्ञाज्जायते। तस्माद्राजन्यं
सवनहृतं हन्यादेनस्वी हैव सवनहृतेति" १. ५. ४०.

"यो वै गर्भस्य काष्ठेन वा शल्येन वा कण्डूयेदपास्यम् म्रियेत्" १. ५. ११

"यो वै ज्ञातोऽनूचान स सम्राड्" ७. ५. २६

"यो वै विष्णु सोमः स" १. १. २१, ५. २. १६.

"योषा दिग्" ७. ५. २१.

"योषायै वा इमा प्रजा प्रजायन्ते" ७. ५. २५.

"योषा वा अम्बा" ७. ५. २१.

"योषा वा ऋक्" ७. ५ २५

"योषा वा ऋत्योता" ७. ५. २५.

"योषित्कामा वै गन्धर्वा" ७. ४. २०.

"रक्षसा ह्येष भागो यदस्क्" ६. ३. १४.

"रक्षयो ह्यस्य विश्वे देवा" ७ ३. ६, १२.

"रसो वै वसा •—• रसोऽयमागो न हीयते" ६. ४. ३०.

"रसो वै वसाहोम" ६. ४. ३५.

"रेत सोम" २. ५. १, ३. १. २८, ३. ४. ११.

"रेतो वै सोम" ७, १. २.

रेवन्तो हि पशव" ५. ६. १२

"लस्पूजन्या सन्धया प्रसीव्यति" ४. ३. २५.

"लिङ्गयेव हि यः •—• यमिहोतमुपयति" ६. ४. २०.

"वर्चो वा श्चान्यम्" २. ४. २ ; २. ५. १ ; ३. ५. ६ ; ४. ३. १५.

"वर्चो वा श्चान्यम् रेत सोमो नेद् वर्चसाश्चान्येन रेतः सोमं हिनसानीति" ५. २. १७ ; ७. ४. २९.

"वर्चो हि वा श्चायः" १. २. ६.

"वनस्पतयो हि यज्ञियाः ; न हि मनुष्या यजेरन् यद् वनस्पतयो न स्युः" २. १. १०.

"वनेषु व्यन्तरिक्षं ततानेति । वनेषु=वृक्षाग्रेषु, वीर्यं वै वाजाः, पुमांसोऽर्वन्तः, हृत्सु ह्ययं क्रतुर्मनोजवः, विक्षु=प्रजासु, दिवि ह्यसौ सूर्यो हितः, गिरिषु हि सोमः" ३. १. ७.

"वरुण्या वा एषा यद्रज्जुः" २. ३. १८ ; ६. १. १.

"वागेव सुपर्णी, इयं कद्रूः" ५. १. २.

"वागेवाग्निः, प्राणोदानौ मित्रावरुणौ, चक्षुरादित्यः, श्रोत्रं विश्वे देवाः" २. १. १२.

"वाग्घि यज्ञः" ४. १. २१.

"वाग् वै पथ्या स्वस्तिः •—• उदीची ह्येतस्यै दिक्" १. २. ८, १५.

"वाग् वै रेवती, सा यद् वाग् बहु वदति तेन वाग्रेवती" ६. २. १२.

"वाग् वै सरस्वती" ७. २. ७, ८.

"वाचे हि दीक्षते, यज्ञाय हि दीक्षते, यज्ञो हि वाग्, दीक्षितो ह वै नामैतद् यद् दीक्षित इति" २. १. ३०.

"विद्वांसो हि देवाः" ५. ६. १०.

"विशो ग्रावाणः" ७. ४. ३.

"विशो विश्वे देवाः" ७. २. १६, १८.

"विशो वै मरुतो भूमो वै विट्" ७. २. १७.

"विष्णुः पराङ्मः" १. ३. १.

"वृत्रो वै सोम आसीत्, तस्यैतच्छरीरं यद् गिरयो यदश्मानस्तच्छरीरेणैवैन मेतत् समर्धयति कृत्स्नं करोति" ७. ५. ७.

"छन्नो वै सोम आसीत्, तस्यैतच्छरीरं यद् गिरयो यदश्मान स्तदेषो-ऽश्मनानामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकि" ३. ४. १३

"वृद्धं वै तद् यज्ञस्य यन्मानुषम्" ३. १. २१.

"शरीरं हैवास्य (अग्ने) पीतुदारु •—• मासं हैवास्य गुग्गुलु •—• गन्धो हैवास्य सुगन्धितेजनम्" ३. २. १८.

"ग्रीष्मो बीज हरन्ति, अनसोदावहन्ति" २. ६. १७.

"श्वेताच्या आशा नेयात्, सा स्यादप्रवीता •—• अवशाकूटा शायाकर्णा-लक्षितासप्तगया" २. ४. १५.

"संवत्सरो वै प्रजापति" २. १. ४.

"स इन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश" १. ५. २६.

"स एव ग्रीवेन् भक्तिक्रोऽनूत्याय मध्ना तस्मात् स यान्न इव त्वष्टा ह्वेत मभ्यवमत् तस्मात् तं नाश्नीयात् स्वगूर्णैतदभिवान्तम्" ६. ४. ११.

'सत्यं वै शुक्रम्" ७. ३. २५.

"समानजन्म वै पयस (आज्यम) हिरण्यम्, उभय ह्यग्निरेत-सम्" २. ३. ८.

"सम्बन्धान्ताविव ह्येमौ लोकौ" १. ५. २.

"स यांशुपकिरन्ति, तेनास्मिल्लोके प्रत्यक्ष भवन्ति, अथ यानदुह्यन्ति तेनामुष्मिल्लोके प्रत्यक्षं भवन्ति" ५. १. २३.

"सर्वे वै विश्वे देवा" ७. २. १३.

"सर्वा ह वै देवता पशुमालभ्यमान मुपसङ्क्रमन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति, सर्वासां हि देवतानां हवि पशु-स्तासां सर्वासां देवतानां पशौ मनाम्योतानि भवन्ति तान्येवैतद् प्रीणाति" ६. ४. १३.

"सर्वे ह वा एते स्वपतोऽपक्रामन्ति प्राण एव न" २. १. २३.

'सविता वै देवानां प्रसविता" २. ५. १०; ४. ३. १०; ७. २. २०;
४. १४; ५. ३.

"स हिरण्यं पदे निधाय जुहोति; न वा अनग्नावाहुतिर्हूयते; अग्निरेतसं
वै हिरण्यम्, तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति" २. ४. ३.

"सा यत् त्रिः संवत्सरस्य विजायते, तेन प्रजापतेर्वर्णः" २. ६. ८.

"सुवासा एव बुभूषेत्" १. २. १६.

"स्योन स्योन मिति, शिवः शिव मित्येवैतदाह" २. ६. १०.

"स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणाः ०—०
एतानि वै धिष्ण्यानां नामानि" २. ६. ११.

"हविर्वा एष देवानां भवति यो दीक्षते; तदेन मन्तर्जम्भ आदधाते,
तत्पशुनात्मानं निष्क्रीणीते" ३. २. २१.

---

## ॥ अथ कर्मसूची ॥

| कर्मनाम | प्र० ब्रा० क० | कर्मनाम | प्र० ब्रा० क० |
|---|---|---|---|
| अग्निप्रणयनम् ... | ४. २, १. | आमावैष्णवेष्टिः ... | १. १. १. |
| अग्निमन्थनम् ... | ३. २. १८. | आज्यग्रहणम् ... | ५. २. ६. |
| अग्निष्टोमः ... ... | १. १. १. | आतिथ्येष्टिः... ... | ३. २. १. |
| अत्युपयाजयागः ... | ७. १. १. | आग्रयणहोमः ... | ५. ३. १५. |
| अधिषवणम् ... ... | ४. ४. १. | आसन्दीकरणम् ... | ३. १. २६. |
| अनुनिःक्रमणम् ... | २. ४. १. | | |
| अनुयाजयागः ... | ६. ५. ८. | उत्तरवेदिव्याघारणम् | ■. १. २३. |
| अपाम्प्रणयनम् ... | १. ३. १. | उपयाजयागः ... | ६. ५. ११. |
| अवान्तरदीक्षा ... | ३. ४. १. | उपसदिष्टिः... ... | ३. ५. १. |

---

## ॥ अर्थिनामादिसूची ॥

---

## ॥ अथ सर्वसूची ॥



---

# शतपथब्राह्मणम्।

अथ

## तृतीयकाण्डम्।

### ॥ अथ प्रथमः प्रपाठकः ॥

॥ प्रथम ब्राह्मणम् ॥

॥ अपि वा प्रथमाध्याये प्रथम ब्राह्मणम् ॥



॥ हरिः ॐ ॥

देवयजनं जोषयन्ते। स यदेव वर्षिष्ठꣳ स्यात् तज्जोषयेरन्यदन्यद्भूमेर्नाभिशयीता*तो वै देवा दिवमुपोदक्रामन् देवान् वा ऽएष ऽउपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीता†वर-तर ऽइव हेष्टा स्यात् तस्माद्यदेव वर्षिष्ठꣳ स्यात् तज्जो-षयेरन् ॥ १ ॥

तद्वर्ष्म सत् समꣳ स्यात्। समꣳ सदविभ्रꣳशि स्याद-

---

*, † 'तिशयीता'–इति सा०-सम्मत इति डा०-वेवर'।

विभ्रꣳशि सत् प्राक्प्रवणꣳ स्यात् प्राची हि देवानां दिगथो ऽउदक्प्रवण मुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रित मिव स्यादेषा वै दिक् पितृणाꣳ स यद्दक्षिणाप्रवणꣳ स्यात् क्षिप्रे ह यजमानोऽमुं लोक मियात्तथो ह यजमानो ज्योग् जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रित मिव स्यात् ॥ २ ॥

न पुरस्ताद्देवयजनमात्र मतिरिच्येत। द्विषन्तꣳ हास्य तद् भ्रातृव्य मभ्यतिरिच्यते कामꣳ ह दक्षिणतः स्यादेव मुत्तरत ऽएतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात् परिशिष्यते क्षिप्रे हैवैन मुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥ ३ ॥

तदु होवाच याज्ञवल्क्यः। व्वार्ष्णाय* देवयजनं जोषयितु मैम तत्सात्ययज्ञोऽब्रवीत्सर्वा वा ऽइयं पृथिवी देवी देवयजनं यत्र वा ऽअस्यै क्व च यजुषैव परिगृह्य याजयेदितिं† ॥ ४ ॥

ऋत्विजो हैव देवयजनम्। ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना विद्वाꣳसो याजयन्ति सैवाह्वलैतन्नेदिष्ठतमा‡ मिव मन्यामह ऽइति ॥ ५ ॥

---

* 'वार्ष्णाय'–इति ग। † 'याजयेदिति'–इति ग।
‡ 'नेदिष्ठमा'–इति ग।

तच्छालां* वा विमितं वा प्राचीनवꣳशं मिन्वन्ति। प्राची हि देवानां दिक् पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठन् जुहोति ॥ ६ ॥

तस्मादु ह नु प्रतीचीनशिराः शयीत। नेद्देवानभिप्रसार्य शया इति या दक्षिणा दिक् सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा उच्चक्रमुः सैषाहीना योदीची दिक् सा मनुष्याणां तस्मान् मानुष उदीचीनवꣳशा मेव शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवꣳशा नादीक्षितस्य ॥ ७ ॥

तां वा एतां परिश्रयन्ति। नेदभिवर्षादिति न्वेव व्वर्षा देवान् वा एष उपावर्त्तते यो दीक्षते स देवताना मेको भवति तिर इव वै देवा मनुष्येभ्यस्तिर इवैतद्यत् परिश्रितं तस्मात् परिश्रयन्ति ॥ ८ ॥

तन्न सर्व इवाभिप्रपद्येत। ब्राह्मणो वैव राजन्यो वा व्वैश्यो वा ते हि यज्ञियाः ॥ ९ ॥

स वै न सर्वेणेव संवदेत। देवान् वा एष उपावर्त्तते यो दीक्षते स देवताना मेको भवति न वै देवाः सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते

* 'तच्छाला'–इति ग।

हि यज्ञियास्तस्माद्येनऽ शूद्रेण संवादो विन्देदेतेषा मेवैकं ब्रूयादिम मिति व्विचक्ष्वेम मिति विचक्ष्वेत्येष उ तत्र दीक्षितस्योपचारः* ॥ १० ॥

अथारणी पाणौ कृत्वा†। शाला मध्यवस्यति स पूर्व्वार्द्धऽ स्थूणाराज मभिपद्यैतद्यजुराहेदं मगन्म देव- यजनं पृथिव्या यत्र देवासो ऽअजुषन्त व्विश्व ऽइति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रु- वाꣳसोऽनूचाना यदु ह्यस्य तेऽक्षिभ्या मीक्षन्ते ब्राह्मणाः शुश्रुवाꣳसस्तदु हास्य तैर्जुष्टं भवति ॥ ११ ॥

यद्वाह। यत्र देवासो ऽअजुषन्त व्विश्व ऽइति तदस्य व्विश्वैर्देवैर्जुष्टं भवत्यृक्सामाभ्याꣳ सन्तरन्तो यजुर्भि- रित्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्यो- दृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदे- मेति भूमा वै रायस्पोषः श्रीर्वै भूमाशिष मेवैतदा- शास्ते समिषा मदेमेतीयं मदतीति वै त माहुर्यः श्रिय मश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् [१.१.] ॥

---

* 'चार –इति क, 'चारः–इति ग। † 'कृत्वा–इति ग।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आधानपुनराधाने अग्निहोत्रं ततः परम् ।
चातुर्मास्यानि च षड्द्वितीयकाण्ड ईरितम् ॥ २ ॥

अथ तृतीयचतुर्थाभ्या मेकाहाहीनसत्त्रलक्षण[1]सकलसोमयाग[2]-प्रकृतिभूतोऽग्निष्टोमोऽभिधीयते[3] । तत्र तृतीयकाण्डस्य प्रथमाध्याये

---

१— "त्रिविधः सोमयागः, एकाहाहीनसत्त्रनामकः । एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः । द्विरात्र मारभ्य एकादशरात्रपर्यन्ता अहीनाः । त्रयोदशरात्र मारभ्य सहस्रसंवत्सरपर्यन्तानि सत्त्राणि । द्वादशाहस्तु द्विरूपः । सत्त्राहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्त्ररूपेण त्रयोदशरात्रादीनाम् । तस्य च द्वादशाहस्य एकाहरूपो ज्योतिष्टोमः प्रकृतिः"—इति तै० सं० १.२.१-सा० भा० । "एकाहाहीनसत्त्राणि सोम-भेदा इति त्रयः"—इत्यादि च तै० सं० ७.१.१-भाष्यारम्भे सायणः । "उक्त-प्रकृतयोऽहीनैकाहाः ( ९. १. १. )"—इत्यारभ्य "इत्येकाहाः, अथाहीना द्व्यहप्रभृतयो द्वादशरात्रपरार्द्धाः ( १०. १. १०, ११. )"—इत्याद्यन्त आश्व-लायनीयश्रौतसूत्रग्रन्थस्तत्रालोच्यः ।

२— "सप्तसंस्थः सोमयागो भवति । तथाहि— "अग्निष्टोमोऽत्यग्नि-ष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति संस्थाः"—इति आश्व० श्रौ० सू० ६. ११. १ । अप्तोर्याम आप्तोर्याम इत्यभिन्नः ।

३— "अग्निष्टोमः प्रथमयज्ञः, अतिरात्र मेके पूर्वं समामनन्ति"—इति आप० श्रौ० सू० १०. २. ३, ४ । अग्निष्टोमे तत्तदङ्गजातस्योपदिष्टत्वात् स एवेतरेषां प्रकृतिः ।

शालानिर्माणप्रभृति दीक्षाहुतिपर्यन्तं प्रतिपाद्यते। तत्रादौ शाला-निर्माणार्थं देवयजनपरिग्रहं विधत्ते— "देवयजनं जोषयन्त इति। देवा इज्यन्तेऽस्मिन्नत्रेति 'देवयजनम्'। अधिकरणे ल्युट्[1]। प्राचीनवंशसदोहविर्धानादिनिर्माणपर्याप्तं देवयजनं स्थानम्[2]। तत् 'जोषयन्ते' सेवन्ते। स्वार्थिको णिच्[3]। परिचरन्तीयुर्यजमानपुरुषाः। तस्य विशेषमाह— "स यदेव वर्षिष्ठं स्यात् तज्जोषयेरन्निति। 'सः' इति प्रसिद्धौ, यच्छब्दविशेषणमेतत्। प्रसिद्धं 'यद्' देवयजनम्, 'तत्' 'वर्षिष्ठम्' अतिशयेन वृद्धम्, उच्छ्रितम्, जोषयितव्य मित्यर्थः। वर्षिष्ठ मित्येतत् स्पष्टयति— "यदन्यदित्यादिना। यदस्याः[4] उपरि गृहीतायाः 'भूमेः' 'अन्यत्' परिसरस्थलं ('नाभिशयीत') नाति-शयीत, अतिशयितं मुच्छ्रितं न च तद् वर्षिष्ठमित्यर्थः[5]। उक्तलक्षणं देवयजनं प्रशंसति— "अतो वा इति। 'अतः' अस्मात्, यदित्युक्त-लक्षणात् 'देवाः' 'दिवम्' 'उपोत्क्रामन्' उत्क्रान्ताः, प्राप्ताः। उत्क्रामन्तु नाम, ततः किमु? इत्यत आह— "देवान्वा इति। यस्मात् 'एष' दीक्षितोऽपि 'देवान्' उपोत्क्रामति, तस्माद् यादृशेन

---

१— पा॰ सू॰ ३. ३ ११३।

२— 'देवयजनस्य मम्'–इति च। "देवयजनं वै वरं पृथिव्यै"–इत्यादि ऐ॰ ब्रा॰ १. ३ २। "प्राचीनं माहवनीयात् प्रवणं स्यात् प्रतीचीनं गार्ह-पत्यादितद्धै व्यावृत्तं देवयजनम्"–इति तै॰ सं॰ ६. २. ६. २५।

३— 'जुष परितर्कणे'–इति चुरादि (१८३५ धा॰), 'परितर्कणं मर्षो हिंसा वा'–इति तत्र दीक्षित। प्रीतिसेवनयोस्तु तुदादित्वात् जुषत इत्येव।

४— 'यदस्य'–इति च।

५— 'मुच्छ्रितं न स्यात्'–इत्येव च।

देवयजनेन देवा दिवं गताः, तादृशं कुर्वन् 'सः' दीक्षितः 'मदेवे' एव 'देवयजने' ('यजते') इष्टवान् भवति। अनेवंविधस्य परिग्रहे दोष माह– "स यदेति। निम्ने देवयजने 'इष्ट्वा' स्वय मेव 'अवरतर इव' अत्यन्त नीच एव 'स्यात्'। "तस्मादित्युपसंहारः। अत्र कात्यायनः सौमिक स्थलिस्वरूप मभिधायाह– "देवयजनं ओषयन्त उच्चतमम्"-इति[१] ॥ १ ॥

अन्यानपि धर्मविशेषानाह– "तदर्शंति। 'वर्ष्म' उन्नतं 'सत्', 'तत्' देवयजनं 'समं स्यात्'; विषमस्य विसदृशदर्शनात् तदभावाय तत् समं कर्त्तव्य मित्यर्थः। समत्वेन 'अविभ्रंशि' अपि स्थल प्राचीन-प्रवणम् उदीचीनप्रवणं वा भवेत्, प्रष्ट्यत्वेन देवानाम्, यष्टृत्वेन मनुष्याणां च देवयजनसम्बन्धसम्भवात्, उभयसम्बन्धिन्योर्दिशोरन्य-तरस्याः प्रवणत्वाभिधान मित्यभिप्राय.। उदक्प्रवणत्वे यदर्थसिद्धं दक्षिणोन्नतत्वम्, तदाह– "दक्षिणतः प्रत्युच्छ्रित मिवेति। विपक्ष-बाधमुखेन दक्षिणप्रवणत्वं निषेधति– "एषा वा इति। 'क्षिप्रे' अचिरेणैव कालेन 'अमुं' परलोकम्, 'तथो ह' पूर्वोत्तरप्रवणत्वपक्षे-ऽप्यचिरकालम्[२] ॥ २ ॥

---

१— 'देवयजनं ओषयन्ते। उच्चतमम्। समम्। अविभ्रंशि। अभितो देवयजनमात्रदेशम्। पुरस्तादजम्। प्राक्प्रवणम्। उदग्वा। यत्निधानू-चानर्त्विज। उद्भतौषधिमूलेऽपरेऽन्ते विमितं कुर्वन्ति"–इति का० श्रौ० ७. १. १०—१९ दश सूत्राणि द्रष्टव्यानि।

२— "दक्षिणत उन्नत मुदीचीनावनत प्राक्प्रवणं प्रागुदक्प्रवणं वा देवयजनम्"–इति आप० श्रौ० सू० १०. २०. १।

